श्रीः

श्रीमते निगमान्तमहादेशिकाय नमः

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि॥

श्रीशङ्कराचार्य विरचितं

# ॥ श्रीराघवाष्टकम् ॥

*This document* has been prepared by*

***Sunder Kidambi***

*with the blessings of*

श्री रङ्गरामानुज महादेशिकन्

**His Holiness *śrīmad āṇḍavan* of *śrīraṅgam***

*This was typeset using LaTeX and the **skt** font.

श्रीः

# ॥ श्रीराघवाष्टकम् ॥

राघवं करुणाकरं मुनिसेवितं सुरवन्दितं
    जानकीवदनारविन्ददिवाकरं गुणभाजनम्।
वालिसूनुहितैषिणं हनुमत्प्रियं कमलेक्षणं
    यातुधानभयङ्करं प्रणमामि राघवकुञ्जरम्॥ १ ॥

मैथिलीकुचभूषणामल नीलमौक्तिकमीश्वरं
    रावणानुजपालनं रघुपुङ्गवं मम दैवतम्।
नागरीवनिताननाम्बुजबोधनीयदिवाकरं
    सूर्यवंशविवर्धनं प्रणमामि राघवकुञ्जरम्॥ २ ॥

हेमकुण्डलमण्डितामलकण्ठदेशमरिन्दमं
    शातकुम्भ मयूरनेत्रविभूषणेन विभूषितम्।
चारुनूपुरहारकौस्तुभकर्णभूषणभूषितं
    भानुवंशविवर्धनं प्रणमामि राघवकुञ्जरम्॥ ३ ॥

दण्डकाख्यवने रतामरसिद्धयोगिगणाश्रयं
    शिष्टपालनतत्परं धृतिशालिपार्थकृतस्तुतिम्।
कुम्भकर्णभुजाभुजङ्गविकर्तने सुविशारदं
    लक्ष्मणानुजवत्सलं प्रणमामि राघवकुञ्जरम्॥ ४ ॥

केतकीकरवीरजातिसुगन्धिमाल्यसुशोभितं
    श्रीधरं मिथिलात्मजाकुचकुङ्कुमारुणवक्षसम्।
देवदेवमशेषभूतमनोहरं जगतां पतिं
    दासभूतभयापहं प्रणमामि राघवकुञ्जरम्॥ ५ ॥

यागदानसमाधिहोमजपादिकर्मकरैर्द्विजैः
    वेदपारगतैरहर्निशमादरेण सुपूजितम्।
ताटकावधहेतुमङ्गदतातवालिनिषूदनं
    पैतृकोदितपालकं प्रणमामि राघवकुञ्जरम्॥ ६ ॥

लीलया खरदूषणादिनिशाचराशुविनाशनं
रावणान्तकमच्युतं हरियूथकोटिगणाश्रयम्।
नीरजाननमम्बुजाङ्घ्रियुगं हरिं भुवनाश्रयं
देवकार्यविचक्षणं प्रणमामि राघवकुञ्जरम्॥ ७॥

कौशिकेन सुशिक्षितास्त्रकलापमायतलोचनं
चारुहासमनाथबन्धुमशेषलोकनिवासिनम्।
वासवादिसुरारिरावणशासनं च पराङ्गतिं
नीलमेघनिभाकृतिं प्रणमामि राघवकुञ्जरम्॥ ८॥

राघवाष्टकमिष्टसिद्धिदमच्युताश्रयसाधकं
मुक्तिभुक्तिफलप्रदं धनधान्यसिद्धि विवर्धनम्।
रामचन्द्रकृपाकटाक्षदमादरेण सदा जपेत्
रामचन्द्रपदाम्बुजद्वय सन्ततार्पितमानसः॥ ९॥

राम राम नमोऽस्तु ते जय रामभद्र रमोऽस्तु ते
रामचन्द्र नमोऽस्तु ते जय राघवाय नमोऽस्तु ते।
देवदेव नमोऽस्तु ते जय देवराज नमोऽस्तु ते
वासुदेव नमोऽस्तु ते जय वीरराज नमोऽस्तु ते॥ १०॥

॥ इति श्रीराघवाष्टकम् समाप्तम्॥